# शंकरानन्दभगवत्कृता माण्डूक्योपनिषद्दीपिका ।

माण्डूक्योपनिषद्व्याख्यां करिष्ये पदचारिणीम् ।
ओमात्माभेदसंबोधादानन्दात्मप्रकाशनीम् ॥ १ ॥

नामनामिनोर्लोके भेदस्याप्रसिद्धत्वाद्वस्तुतश्चोंकारस्य ब्रह्मविवर्तत्वाद्विवर्तानां च विवर्ताधिष्ठानेन भेदशून्यत्वादत ओंकारं ब्रह्मनामधेयं ब्रह्मदृष्ट्याऽऽह—ओम् । अवति ब्रह्मबुद्ध्या दृष्टो द्रष्टॄनित्योम् । इति, ओंकारानुकरणार्थः । एतत् । उक्तमोंकाररूपं जगत्पर्णस्य शङ्कुस्थानीयं ब्रह्मणा तादात्म्यं प्राप्तं ब्रह्मणो विकारो नामधेयं च । अक्षरम् । वर्णात्मकम् । इदं विविधप्रत्ययगम्यं चेतनाचेतनात्मकं जगत्सर्वं निखिलं तस्य सर्वात्मकस्योंकारस्योपव्याख्यानमुप सामीप्येन विस्पष्टमा समन्तात्कथनमुक्तार्थविवरणमित्यर्थः । भूतमतीतं भवद्वर्तमानं भविष्यदनागतमित्यनेन प्रकारेण सर्वं निखिलमोंकार एव प्रणव एव न त्वन्यत् । यच्च यदपि प्रसिद्धं सदसदात्मकमन्यदुक्ताद्व्यतिरिक्तं त्रिकालातीतमुक्तकालत्रयासंसृष्टं[३] तदप्युक्तं ब्रह्म नरविषाणादिकमपि । अ...पिशब्दः पूर्वेण समुच्चयमाह । ओंकार एव व्याख्यातम् । ओंकारस्य ब्रह्मणो नामधे...त्वादिसंख्याप्तिरित्यभिप्रायेणाऽऽह—सर्वं निखिलं हि निश्चितमेतत्प्रपञ्चजातं ब्रह्म सत्यज्ञाना...दिलक्षणं बृहत् । जडस्यैव ब्रह्मात्मत्वमुक्तं न चेतनस्येतिशङ्कानिराकरणार्थमाह—अयमनुभूयमान आत्माऽस्मत्प्रत्ययालम्बनश्चेतनस्त्वंपदार्थः । ब्रह्मोक्तं तत्पदार्थः । स कार्यकारणभावमन्तरेण ब्रह्मणा तादात्म्यं प्राप्तोऽयमात्मा व्याख्यातम् । चतुष्पाच्चत्वारः पादा यस्य स चतुष्पात् ।

गौरिव किं चतुष्पादित्याशङ्क्य नेत्याह—जागरितस्थानो जागरितं स्थानं यस्य स जागरितस्थानः । = बहिःप्रज्ञो बही रूपादौ चक्षुरादिग्राह्ये प्रज्ञा यस्य स बहिःप्रज्ञः सप्ताङ्गः सप्तसंख्याकानि द्युसूर्यवाय्वाकाशरयिपृथिव्याहवनीयाख्यानि मूर्धचक्षुःप्राणशरीरान्तर्भागमूत्राशयपादास्यान्यङ्गानि यस्य स सप्ताङ्गः । एकोनविंशतिमुखः, पञ्चज्ञानकर्मेन्द्रियप्राणान्तःकरणचतुष्टयरूपाणि मुखान्येकोनविंशतिसंख्याकानि यस्य स एकोनविंशतिमुखः । स्थूलभुक्, स्थूलं रूपादिकं भुङ्क्त इति स्थूलभुक् । वैश्वानरो विश्वेषामयं नरो विश्वे वा नरा यस्य विश्वश्चासौ नरश्चेति[वा] विश्वानरः, स एव वैश्वा-

---

= अत्र नित्यं समासेऽनुत्तरपदस्थस्येति षत्वाभावस्तु च्छन्दसि दृष्टानुविधेराश्रयणात् ।

---

१ ग. °दृष्ट्येत्याह । २ ग घ. °सं भवति । ओंका° । ३ ग. °संस्पृष्टं । ४ ग. °ह—शरीरान्तर्भागं सु° । ५ ग. °शवाग्निपृ° ।

नरः। अथ वा विश्वेषां नरशब्दवाच्यानां चतुर्विधानां स्थूलानां देहानामधिष्ठाताऽयं **वैश्वानरः प्रथमः पादः**। आत्मनोऽयं सर्वैः सुकरावगमत्वात्प्रथमोंऽशः।

इदानीं द्वितीयं पादमाह—**स्वप्नस्थानः** स्वप्नं जागरितवासनाजन्यं स्थानं यस्य स स्वप्नस्थानः। **अन्तःप्रज्ञो**ऽन्तर्मानसवासनाविलासे प्रज्ञा बुद्धिर्यस्य सोऽन्तःप्रज्ञः। **सप्ताङ्ग एकोनविंशतिमुखः**। व्याख्यातम्। **प्रविविक्तभुक्**प्रविविक्तं सूक्ष्मं भुङ्क्त इति प्रविविक्तभुक्। **तैजसः**तेजोऽन्तःकरणं कर्तृकरणकार्यादिभावेन परिणतं तदेव स्थूलशरीरादिहीनं यस्य स तैजसः। अन्तःकरणस्य स्वामीत्यर्थः। जागरितानन्तरभावित्वात्। **द्वितीयः पादः**। स्पष्टम्।

इदानीं तृतीयं पादं वक्तुमाह—**यत्र** यस्मिन्काले **सुप्त** उपरतेन्द्रियग्रामो **न कंचन कामं कामयते** कमपि पुण्यपापहेतुभूतं पुत्रक्षेत्रादिकं नाभिलषति। **न कंचन स्वप्नं पश्यति** कमपि शुभमशुभं वासनाविलासं नावलोकयति **तत्**कामाकामनस्वप्नानवलोकनरूपं **सुषुप्तं** गाढनिद्राप्राप्तिस्थानम्। **सुषुप्तस्थानः**। सुषुप्तं स्वयं श्रुत्या व्याख्यातं स्थानं यस्य स सुषुप्तस्थानः। **एकीभूतः**। सर्वजगद्बीजभूतस्याऽऽवरणात्मकस्याज्ञानस्यानुपरमादनेकोऽप्यन्तःकरणविक्षेपोपरमादेकतां गतः **प्रज्ञानघन एव** प्रज्ञानमात्मनो रूपं ब्रह्मणा भेदरहितं स्वयंप्रकाशं तस्य घनः पिण्ड इव स एव न त्वन्तःकारणादिबाह्यं च। **न च** निरानन्द इत्याह—**आनन्दमयो** विक्षेपाणामुपरमादावरणस्यानुवृत्तेश्च स्वरूपानन्दप्रचुरो **हि** यस्मात्तस्मा**दानन्दभुग**ानन्दो विक्षेपाभावोपलक्षित आत्मा तमेव भुङ्क्तेऽज्ञानवृत्तिभिरवगच्छतीत्यानन्दभुक्। **चेतोमुखश्चेत** आत्मस्वरूपबोधः स एवाऽऽवरणशक्तिसहितो मुखं यस्य स चेतोमुखः। **प्राज्ञः** प्रकृष्टे स्वयंप्रकाश आनन्दात्मनि साज्ञाने ज्ञप्तिरज्ञानवृत्तिरूपो बोधो यस्य स प्रज्ञः प्रज्ञ एव प्राज्ञः। उक्तावस्थाद्वयाभावेनावगम्यमानत्वात्। **तृतीयः पादः**। स्पष्टम्। इदानीं प्राज्ञं प्रस्तौति सर्वकारणत्वात्तस्य। **एष** उक्तः प्राज्ञः **सर्वेश्वरः** सर्वनियामकः **एष प्राज्ञः सर्वज्ञः** सर्वश्चासौ ज्ञश्चेति सर्वकार्यात्मकत्वादज्ञानस्य वा जानातीति सर्वज्ञः। **एष** प्राज्ञोऽन्तर्याम्यन्तर्यमयिता। **एष** प्राज्ञो **योनिः** कारणं **सर्वस्य** निखिलस्य चेतनाचेतनात्मकस्य जगतः। योनित्वे हेतुमाह—**प्रभवाप्यया**वुत्पत्तिविनाशौ **हि** यतो **भूतानां** चेतनाचेतनरूपाणामितो भवत इति शेषः।

इदानीं तुरीयं पादमाह—**नान्तःप्रज्ञं** न मानसवासनाविलासदर्शनलालसं **न बहिःप्रज्ञं** नेन्द्रियैर्विषयावलोकनपरं **नोभयतःप्रज्ञं** जागरणस्वप्नान्तरालावस्थावबोधशून्यं **न प्रज्ञानघनं** न ज्ञानमात्रबाधं **न प्रज्ञं** निखिलावबोधशून्यं **नाप्रज्ञं** न बोधाभावरूपम्। **अदृष्टं** प्रत्यक्षादिप्रमाणैरनवलोकितम्। **अव्यवहार्यं** वचनादानादिव्यवहारग-

न्धरहितम्। **अग्राह्यं** सर्वप्रकारग्रहणायोग्यम्। **अलक्षणं** गन्धत्वादिबोधशून्यम्। **अचिन्त्यम्** अन्तःकरणवृत्त्यविषयभूतम्। **अव्यपदेश्यं** पृथिवीत्यादिव्यपदेशवद्व्यपदेशायोग्यम्। **एकात्मप्रत्ययसारं** सर्वाद्वैतप्रत्ययः सारभूतोऽवगतिहेतुत्वेन यस्मिंस्तदेकात्मप्रत्ययसारं वाङ्मनसातीतमप्यात्मबोधेनावगन्तुं शक्यमित्यर्थः। **प्रपञ्चोपशमं** प्रपञ्चस्य कार्यकारणात्मकस्योपशमोऽभावो यस्मिंस्तत्प्रपञ्चोपशमम्। [ **शान्तं** स्पष्टम्। ] **शिवं** स्वयंप्रकाशमानन्दात्मस्वरूपत्वान्मङ्गलम्। **अद्वैतम्** आनन्दात्मव्यतिरिक्तशून्यं **चतुर्थं** तुरीयं पादं **मन्यन्ते** संख्याशून्यमपि पूर्वापेक्षयाऽवगच्छन्ति **स** वस्तुतस्त्वतुरीयरूपोऽप्यविद्यया चतुष्पादात्माऽऽनन्दात्माऽस्मत्प्रत्ययव्यवहारयोग्यः **स** तुरीयरूपोऽपगतसमस्तविशेषो **विज्ञेयो** विशेषेण साक्षात्कर्तव्यः।

इदानीमात्मोंकारयोरभेदं कण्ठत आह—**सोऽयमात्मा** व्याख्यातम्। **अध्यक्षरम्** अक्षराण्यकारोकारमकारार्धमात्राख्यानि स्वपादसंमितान्यधिकृत्य वर्तत इत्यध्यक्षरम्। **ओंकार** ओंकारस्वरूप ओंकारस्याऽऽत्मस्वरूपत्वे साम्यम्। **अधिमात्रम्** अकाराद्याश्चतस्रो मात्रा विश्वादिपादसमसंख्याका अधिकृत्याधिमात्रम्। आत्मोंकारयोरभेदे कारणमाह—**पादा** विश्वतैजसप्राज्ञतुरीयाख्या **मात्रा** अकारोकारमकारार्धमात्राः। तादात्म्यं दृढीकर्तुमुक्तं विपर्ययेण निर्दिशति—**मात्राश्च पादाः**। चकार एवकारार्थः। नायं विपर्ययनिर्देशस्त्वमहमितिवदुपचारार्थः किं तु घटः कलशः कलशो घट इतिवन्निरुपचरितं मात्राणां पादानां च तादात्म्यमित्येवकारार्थः। व्याख्यातमन्यत्। अर्धमात्रायास्तुरीयपादरूपत्वात्तुरीयस्य च पूर्वपादत्रयादत्यन्तवैलक्षण्यादतोऽर्धमात्रां परित्यज्य शेषमात्रा आह—**अकार उकारो मकारः**, स्पष्टम्। इति मात्रात्रयनिर्देशार्थः। इदानीं विभागेन मात्राणां पादरूपतामाह—**जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा**। पूर्वा मात्रा। व्याख्यातमन्यत्। अकारस्य पूर्वमात्रात्वे उपपत्तिमाह—**आप्तेर्व्याप्तेः**। अकारो हि जागरितस्थानादिकं सर्वमाप्नोति। प्रकारान्तरेण पुनर्निरुक्तिमाह—**आदिमत्त्वाद्वा**। अ आ इ इत्येवमादिरादिः स यस्मिन्नस्ति सोऽयमादिमांस्तस्य भाव आदिमत्त्वमादिसामान्यवत्त्वमित्यर्थः। प्रथमपादोऽपि यथा पादानामादिरत एव तत्सामान्यवानाप्नोति चेतरत्पादजातं पूर्वभावित्वात्। वाशब्दः पक्षान्तरार्थः। विश्वाकारयोरैक्यमत्रिवाऽऽदिमत्त्वाद्वेत्यर्थः। इदानीं विश्वाकारयोरैका (क्या) दिमत्त्वज्ञानात्फलमाह—**आप्नोति** ह प्रसिद्धान्वै स्मर्यमाणान्सर्वान्निखिलान्कामान्काम्यमानान्पुत्रक्षेत्रादीन्। आप्तेः फलमुक्त्वाऽऽदिमत्त्वस्य फलमाह—**आदिश्च** स्वानां मध्ये सर्वेषु कार्येषु प्रथमगण्यः। चकारादपि प्रथमं फलं भवति, स्पष्टम्। यस्य फलं तमाह—**यः** पादमात्रातादात्म्यज्ञ **एवम्** उक्तेन प्रकारेणो-

१ क. ख. भेदका°. २ ग. शेषा मा°।

क्तयोः पादमात्रयोः सामान्यं वेद जानाति स आप्नोतीत्यन्वयः। **स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रा**। स्पष्टम्। तैजसोकारयोस्तादात्म्ये हेतुमाह—**उत्कर्षा**-दूर्ध्वभावित्वेनोत्कृष्टत्वात्। पुनरन्यत्सामान्यमाह—**उभयत्वाद्वा**। विश्वाकाराभ्यां तैजसो-कारयोर्द्वितीयत्वात्। वाशब्दः पूर्ववत्। इदानीमुक्तज्ञानस्य फलमाह—**उत्कर्षति ह वै ज्ञानसंततिं** शिष्यप्रशिष्यादिज्ञानसंतत्योत्कृष्टो भवति। व्याख्यातमन्यत्। उभयत्वज्ञानस्य फलमाह—**समानश्च भवति**, यो हि स्वावस्थानदेशे काले वोत्कृष्टस्तत्समानः। चकारात्तस्मादुत्कृष्टोऽपि भवति। इदानीमुभयज्ञानस्य साधारणं फलमाह—**नास्याब्रह्म-वित्कुले भवति**। अस्योत्कर्षोभयत्वज्ञानवतः कुलेऽन्वये शिष्यप्रशिष्यादिरूपेऽहं ब्रह्मास्मीत्येतज्ज्ञानशून्यो न भवति। **य एवं वेद**, व्याख्यातम्। **सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा**, स्पष्टम्। प्राज्ञमकारयोस्तादात्म्ये हेतुमाह—**मितेर्मिनोति हि** प्राज्ञः सर्वमात्मनि तादात्म्येन मकारोऽप्यकारोकारौ प्रक्षिपत्येवमात्मस्वरूपेऽन्यथोंकारस्या-निष्पत्तेः। **अपीतेर्वा** मकारो ह्योंकारे वर्तमानः स्पष्टं नोपलभ्यते ततः प्रलयः प्राज्ञश्च प्रलयः प्रसिद्धः प्रलयसामान्यात्। वाशब्दः पूर्ववत्। इदानीं मितिज्ञात(न)स्य फलमाह—**मिनोति ह वा इदं सर्वम्**। इदं विविधप्रत्ययगम्यं जगन्निखिलं प्रस्थमिव यावत्, मिनोति सर्वात्मभावेन स्वात्मनि प्रक्षिपति। अपीतिज्ञानस्य फलमाह—**अपीतिश्च भवति**, सर्वाधिक्येन प्रलयः सर्वस्य, चकारात्स्वयं प्रलयशून्यश्च भवति। **य एवं वेद**, व्याख्यातम्। अर्धमात्राया अवयवस्योंकारस्यावयविनश्चाभेदमुररीकृत्य चतुर्थपादरूपानिर-ञ्जनात्मस्वरूपतामोंकारस्याऽऽह—**अमात्रोऽ**कारादिमात्राशून्य**श्चतुर्थोऽव्यवहार्यः प्रपञ्चो-पशमः शिवोऽद्वैतः**, स्पष्टम्। **एवमुक्तेन** मात्रातादात्म्येन**ोंकार आत्मैव**, स्पष्टम्। **संविशति** सम्यक्प्रवेशं करोत्यात्म**नो**ंकारेणाऽऽत्मान**मात्मानं**दात्मस्वरूपं **य** ओंकारात्मज्ञ-एवमुक्तेन मकारेणोंकारात्मनोस्तादात्म्यं **वेद** जानाति तस्योक्तोंकाररूपानन्दात्मप्राप्ति-फलमर्थसिद्धं ततः श्रुत्या नोक्तम्। अथ वा संविशत्यात्मनाऽऽत्मानमितीदं फलवा-क्यमस्तु॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य श्रीशंकरानन्दभगवतः कृतौ माण्डूक्योपनिषद्दीपिका समाप्ता॥



